# SARASVATI-BHAVANA-GRANTHAMALA

( *Vol. 109* )

**General Editor**
DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi



# JAIMINĪYA SĀMAGĀNA

Edited by
**VIBHŪTIBHŪṢAṆA BHAṬṬĀCĀRYA**

VARANASI
**1976**

Published by—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi–221002.

First Edition : 500 Copies
Price Rs. 45·50

Available at–
Publication Section
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi–221002.

Printed by—
Ghanashyama Upadhyaya,
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press
Varanasi–221002.

सरस्वतीभवन-ग्रन्थमाला

( १०९ )

प्रधानसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये



# जैमिनीयं सामगानम्

सम्पादकः

विभूतिभूषणभट्टाचार्यः

ग्रन्थाध्यक्षचरः

सरस्वतीभवनपुस्तकालयस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये



वाराणस्याम्

२०३३ तमे वैक्रमाब्दे    १९७६ तमे खैस्ताब्दे    १८९८ तमे शकाब्दे

प्रकाशकः —
निदेशकः, अनुसन्धानसंस्थानस्य,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये,
वाराणसी–२२१००१

प्राप्तिस्थानम्—
प्रकाशनविभागः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः,
वाराणसी–२२१००२.

प्रथमं संस्करणम् : ५०० प्रतिरूपाणि
मूल्यम् : ४५ = ५० रूप्यकाणि

मुद्रकः—
घनश्याम उपाध्यायः
व्यवस्थापकः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीयमुद्रणालयस्य
वाराणसी–२२१००२

# प्रास्ताविकम्

समुपलब्धे विश्वजनीने वाङ्मये वेदः पुरातनतमो विशालश्च निधिरिति ध्रुवं प्रत्ययो विश्वेषां मनीषिणाम्। भारते वर्षे सर्वासां विद्यानाम्, सर्वेषां शास्त्राणां चोपजीव्यभूतो वेद एव। स च परब्रह्मणो निःश्वासभूतः। अत एव सर्वज्ञानमयत्वं धर्ममूलत्वं च प्रतिष्ठितं तदीयम्। यज्ञसन्तत्यर्थमेकोऽपि वेदश्चातुर्विध्यमानीतः परावरज्ञेन भगवता व्यासेन। वस्तुतस्तु पूर्वकल्पे सनातना ये वेदा ऋग्यजुःसामसंज्ञकास्त एव सर्वज्ञस्य परमात्ममूर्तेर्ब्रह्मणः स्मृतिपथमारूढाः। इत्थं कल्पादौ ब्रह्माऽनलाद् ऋग्वेदम्, अनिलाद् यजुर्वेदम्, आदित्याच्च सामवेदं समाचकर्षेति मनुना समाम्नातम्। तन्मूलं शतपथब्राह्मणीयः 'अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात् सामवेदः, आङ्गिरसोऽथर्ववेदः' इति पाठः। कालेनाऽऽगतनिद्रस्य शिशयिषोर्धातुर्मुखतो निस्सृतान् उपाहरद् वेदान् हयग्रीवः। हत्वा तमेवासुरं वेदान् प्रत्याहरद्धरिरितीदं भागवतीयमुपाख्यानं वेदत्रय्याः सनातनत्वं साधयति। हयग्रीवाराधनया पञ्चालर्षिणा वेदानां क्रमपाठः समधिगत इति महाभारतीये शान्तिपर्वणि ( ३३५,६९-७१ ) कथा।

व्यासस्तु ब्रह्मपरम्परया प्राप्तानपि व्यस्ताध्ययनान् ऋग्यजुःसामाथर्वाख्यान् वेदान् व्यवस्थाप्य पैल-वैशम्पायन-जैमिनि-सुमन्तुभ्यः क्रमादुपदिष्टवान्। ऋग्वेदसंहितायां पद्यात्मिकानां पुरातनीनाम् ऋचां संग्रहो दृश्यते। यजुर्वेदसंहितायां वैदिकयज्ञानां कर्मकाण्डसंबन्धीनि गद्यात्मकानि यजूंषि निबद्धानि, अथर्ववेदसंहितायां प्राचीनाथर्वाणि ( मन्त्रज्ञानानि ) संदृब्धानि। सामवेदसंहितायां तु पद्यात्मिकानाम् ऋचां प्राचीनानि सामानि=गीतानि संरक्षितानि।

ऋग्वेदसंहितायां बहुत्र साम्नामुल्लेखो दृश्यते। तत्र मन्त्रेषु च वैरूपम्, बृहत्, गौरवीति, रैवतम्, अर्कम्, गायत्रम्, श्लोकः, भद्रम् इत्यादीनि सामगाननामानि समुल्लिखितानीति सामवेदसंहिताया ऋग्वेदसंहितातः परवर्तित्वं न शक्यते कल्पयितुम्। अध्वरे तेषां यौगपद्येन प्रयोगात् पूर्वापरीभावकल्पना नास्ति सध्रीचीना।

सामापरपर्यायश्छन्दःशब्दः। ऋते छन्दोभ्यः पादात्मिकानाम् ऋचां प्रस्तुतिर्न शक्नोति भवितुम्। 'छन्दांसि च दधतोऽध्वरेषु' ( ऋ. १०, ११४, ५ ) इत्यत्र गायत्र्यादीनि सप्तच्छन्दांसि तत्राभिप्रेतानि। गायन्तं त्रायते यस्माद् गायत्री तु ततः स्मृता' इति गायत्र्या व्युत्पत्तिरपि गानमहिमानमभिव्यनक्ति। 'गायत्रेण प्रति मिमीते अर्कम्, अर्केण साम त्रैष्टुमेन वाकम्' ( ऋ० १, १६४, २४ ) इत्यत्रार्चनसाधनमन्त्ररूपेणार्केण गायत्ररथन्तर-संज्ञस्य साम्नः परिच्छेदोऽभिहितः। छन्दसो वैशिष्ट्यात् परतश्छन्दःशब्देन सम्पूर्णस्य

वेदस्य ग्रहणमुपक्रान्तम्। ऋग्वेदसंहितायां बहुत्र प्रशंसाऽऽसाद्यते साम्नाम्—'न परः साम्नो विदुः' (ऋ. २,२३,१६), 'यो जागार तमु सामानि यन्ति' (ऋ॰ ५, ४४, १४), 'तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत' (१०, ६० ६)। इत्थम् ऋचां साम्नां च सत्यामपि मिथोऽवलम्बितायां साम्नामुत्कृष्टताऽभिधीयते—'यः श्रेष्ठतामश्नुते सामन् भवति' (ऐब्रा॰ ३, २३), 'यत् खलु साधु, तत् सामेत्याचक्षते, यदसाधु तदसामेति' (छान्दोग्यो॰ २, २, १), 'सामानि यो वेत्ति स वेद तत्त्वम्' (बृहद्देवता) इति।

'अर्केण साम' (ऋ॰ १, १६४, २४) इति दृष्ट्वा शतपथब्राह्मणे मनुस्मृतौ च सूर्यात् सामवेदस्य समाकर्षणम् अभ्युपगतं स्यात्। गायत्रीमन्त्र आदित्यध्यानपरक इत्यादित्याज्ज्ञानावाप्तौ नास्ति संशीतिलेशोऽपि। आदित्यसकाशाद् हनूमता विभिन्नशास्त्राणां ज्ञानमुपलब्धमिति ज्ञायते पद्मपुराणात् (पाता॰ ११४, उ॰ ६६)। मन्ये, सामवेदसंहिताया अप्यध्ययनं कृतं स्यात् तेन सूर्यसनीडात्। देवकीनन्दनेन श्रीकृष्णेन घोराद् आङ्गिरसात् समधीता सामवेदसंहितेति च्छान्दोग्योपनिषदो ज्ञायते—'तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच। अपिपास एव स बभूव। सोऽन्तवेलायाम् एतत्त्रयं प्रतिपद्यते—अक्षितमसि, अच्युतमसि, प्राणसंशितमसीति। तत्रैते द्वे ऋचौ भवतः' इति (छा॰३, १७,६)। अत एव श्रीमद्भगवद्गीतायां 'वेदानां सामवेदोऽस्मि' (१०, २२) इति संकीर्तयता तेन वेदेषु सामवेदस्य श्रेष्ठत्वं प्रतिष्ठापितम्। तदुपदेशग्रन्थस्य संज्ञा च गीता जाता। 'ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्' (गी॰ १३, ४), 'गायत्री छन्दसामिव' (१०, ३५) इति च समुपवर्णितम्। आत्मनः सामवेदज्ञतावैशिष्ट्याद् देवकीनन्दनेन श्रीकृष्णेन बहुसंविधानं मनःश्रोत्रसुखावहं छालिक्यगानमुपज्ञातम् इति हरिवंशपुराणादवगम्यते। मालविकाग्निमित्रे प्राकृतभाषायां च सा परम्परेति तत्र 'छलिकम्' (छलिअं) दृश्यते। पाणिनीये नडादिगणे (४, १, ९९) 'शलङ्कु शलङ्कं च' इत्यन्तर्गणसूत्रम्। 'शालङ्केर्यूनश्छात्राः शालङ्काः' इति महाभाष्यम् (४, १, ९०)। पाणिनिरपि शालङ्कि-पदेनाभिधीयत इति सामवेदेन सह तदीयः संबन्धो गम्यते।

एवं सत्यपि, सामगानस्य गर्हणापि श्रूयते। श्रूयमाणे सामध्वनावृग्यजुषोः कदाचिदप्यध्ययनं न कुर्यात्, वेदं च समाप्याऽऽरण्यकं वेदैकदेशम् अधीत्य तदहोरात्रे वेदान्तरं नाधीयीतेति मनुस्मृतौ (४, १२३)—

सामध्वनावृग्यजुषी नाधीयीत कदाचन।
वेदस्याधीत्य वाप्यन्तमारण्यकमधीत्य च॥ इति।

सामवेदस्योपवेदे गान्धर्ववेदे नूनं सामगानस्य प्रभावो विद्यते। विद्याधरस्तुम्बुरुर्गान्धर्वशास्त्रस्य पारदृश्वा विद्वानिति विदन्त्येव पौराणिकाः। स खलु गान्धर्वशास्त्रस्योपजीव्यभूतं सामगानमपि सम्यग् वेत्ति स्म (महाभारते २, १५६, २६)—

उपासीनस्य धनदं तुम्बुरोः पर्वसन्धिषु ।
गीतसामस्वनस्तात श्रूयते गन्धमादने ॥ इति ।

परतस्तु सामगायकानां गान्धर्वगायकानां चावरत्वं समजनि। पूर्वं तु 'गान्धर्वं नारदो वेत्ति' इति महाभारते गान्धर्वज्ञस्य नारदस्य स्पष्टं श्लाघा। केनचित् कारणेन प्रवृत्तायां कुत्सायां सामगानस्य प्रायो विलोप एव संजातः। सामगानविदां दौर्लभ्य-मिदानीमप्यनुभूयत उत्तरभारते।

याज्ञवल्क्यस्मृतौ ( ३, ४, ११२ ) सामगानस्य गान्धर्वशास्त्रस्य च भूयसी प्रशंसा वर्तते। सामध्वन्यनुस्यूतात्मा, एकाग्रचित्तवृत्तिः पठंस्तदभ्यासवशात् तत्र निष्णातः शब्दाकारशून्योपासनेन परं ब्रह्माधिगच्छति—

यथाविधानेन पठन् सामगायमविच्युतम्।
सावधानस्तदभ्यासात् परं ब्रह्माधिगच्छति ॥ इति ।

यस्य पुनर्वैदिक्यां गीतौ चित्तं नाभिरमते, तेन लौकिकगीतानुस्मृतात्मोपासनं कार्यम्। १. अपरान्तकम्, २ उल्लोप्यम्, ३. मद्रकम्, ४. प्रकरी, ५. औवेणिकम्, ६. सरोबिन्दुः, ७. उत्तरं चेत्येतानि प्रकरणाख्यानि सप्त गीतकानि। आसारित-वर्धमानकादि-महागीतान्यपि गृह्यन्ते। ऋग्गाथाद्याश्चतस्रो गीतिका इत्येतदपरान्तकादिगीतजातमध्यारो-पितात्मभावं मोक्षसाधनत्वान्मोक्षसंज्ञितं मन्तव्यम्, तदभ्यासस्यैकाग्रतापादनद्वारेणात्मैका-पत्तिकारणत्वात्। तदुक्तं तत्रैव ( ३, ४, ११३–११४ )—

अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा।
औवेणकं सरोबिन्दुमुत्तरं गीतकानि च ॥
ऋग्गाथापणिका दक्षविहिता ब्रह्मगीतिका।
गेयमेतत् तदभ्यासकरणान्मोक्षसंज्ञितम् ॥ इति ।

लौकिकगानज्ञो वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदस्तालज्ञश्चाप्रयासेन मोक्षमार्ग-मवाप्नोतीति तत्रैव ( ३, ४, ११५ ) आख्यातम्—

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥ इति ।

भगवता श्रीकृष्णेन 'ओम्' इत्येकाक्षरस्य व्याहारानुस्मरावुक्तौ। सामवेदसंहितायाम् ओमित्येतदक्षरमुद्गीथत्वेन निरूपितम्। उद्गाता यज्ञे 'ओम्' इत्युच्चैरुद्गायतीति तस्योद्गीथ इति संज्ञा संवृत्ता—'ओमित्येतदक्षरमुद्गीथमुपासीत। ओमिति ह्युद्गायति तस्योपव्याख्यानम्' ( छान्दो० १, १, १ )। 'ऋचः साम रसः, साम्न उद्गीथो रसः' ( छान्दो० १, १, २ )। तत्रोद्गीथानुगता देवता खल्वादित्यः—'आदित्य इति होवाच, सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यो मूर्द्धा

ते व्यपतिष्यत् तथोक्तस्य मयेति' ( छान्दो० १, ११, ७ ) । देवकीनन्दनकृष्णोपदेशप्रसङ्गे घोरेण आङ्गिरसेन द्वे ऋचावुपदिष्टे आदित्यदेवतापरे । 'गायत्री छन्दसामिव' ( १०, ३५ ) इति गीतायामुपदिष्टवतो भगवतो गायत्र्यनुगता ह्यादित्यदेवताभिमतेति प्रणवश्छन्दसामिवेति नोक्तं तेन ।

अथ खलु य उद्गीथः स प्रणवो बह्वृचानाम्, यश्च प्रणवस्तेषां स एव छान्दोग्य उद्गीथशब्दवाच्यः, उद्गीतरम्यपाठत्वात्—'ओमित्युद्गायति' ( छान्दो० १, १, ६ )। पृथिव्या उपरि यथाग्निरध्यूढस्तद्वद् ऋच उपरि साम स्थितम्। अत एव कारणाद् ऋच्यध्यूढमेव साम गीयत इदानीमपि च्छन्दोगैः ( तु० छान्दो० १, ६, १ ) । अत एव कृष्णेन वेदेषु सामवेदस्याभ्यर्हितत्वमाख्यातम् ।

बृहद्रथन्तरादीनि नानाविधानि भवन्ति सरहस्यानि सामानि । तत्र सामसु बृहत्साम्नोऽतिरात्रयामीयस्य मघवस्तुत्यात्मकस्य पृष्ठस्तोत्रस्य ज्यायस्त्वम् । अत एव श्रीमद्भगवद्गीतायां संकीर्तितम्—'बृहत्साम तथा साम्नाम्' ( १०, ३५ ) इति ।

सामवेदसंहितायाः सहस्रं शाखाः श्रूयन्ते । सहस्राधिकप्रकारैर्गानं संभवति साम्न इत्येतदर्थं पतञ्जलिना तथोल्लिखितमिति समामनन्ति केचन विद्वांसः । वस्तुतस्तु तत्र सामवेदस्य सहस्रवर्त्मता प्रतिपादिता, न तु तदीयस्य गेयभागस्य सामगानस्य । सुविशालस्य संस्कृतवाङ्मयस्य पर्यालोडनेन सामवेदस्य सहस्रवर्त्मता स्पष्टा भवति । तस्य चरणाः शाखाः संहिता वा तत्तत्प्रवचनकर्तॄणां नामभिः प्रसिद्धिं प्रतिपन्नाः । तेषामन्यतमो जैमिनी राजते व्यासशिष्यः । तन्नाम्नापि जैमिनीयसामवेदसंहिता प्रथिता । राणायनीयशाखाया नवमभेदात्मिकेयमिति मतस्य पर्यालोचनमपेक्ष्यते । सुदीर्घा खलु जैमिनेः शिष्यपरम्परा । जैमिनिरयं महाभारते बहुत्र समुल्लिखितः । भारतमप्येतेन विरचितमासीत् । तस्याश्वमेधिकं पर्वैव सम्प्रति समासाद्यते । कृतप्रोक्तभेदेनास्य नाम्ना प्रसिद्धिमुपगताः संहिता-ब्राह्मण-गान-सूत्र-निघण्टु-गृह्यसूत्र-भारत-भागवत-पुराण-सूत्रकारिका-स्मृति-स्तोत्रप्रभृतयो ग्रन्थाः सन्ति । जैमिनिगृह्यसूत्रीय उपाकर्माङ्गतर्पणे स्मृतेषु त्रयोदशसंख्याकेष्वाचार्यनामसु जैमिनेरपि नामधेयं विद्यते । प्रवर्तकेष्वृषिष्वन्यतमः सामवेदीयः श्रुतर्षिर्गण्यते स्म । जैमिनेः सामशिष्यपरम्पराके विद्यावंशे त्रयः शिष्याः प्रामुख्यमाप्ताः—सुमन्तुः, सुत्वा, सुकर्मा चेति । सुकर्मणा सामवेदसंहितायाः शाखासहस्रमधीतम्—'स सहस्रमधीत्याशु सुकर्माऽप्यथ संहिताः' ( वायुपु० ६१,२७ ) । ततस्तासु शतपञ्चकं पौष्यञ्जये, अवशिष्टं च हिरण्यनाभाय कौशल्याय दत्तवान् सुकर्मा । पौष्यञ्जिशिष्या उदीच्यसामगत्वेन, हिरण्यनाभशिष्याश्च प्राच्यसामगत्वेन सुविख्यातिमुपेताः । विष्णुपुराणे द्वयोरेतयोः शिष्यास्त्रिंशत्संख्याकाः प्रदर्शिताः । पौष्यञ्जिशिष्याः षडभूवन् । तेषु लाङ्गलिना स्वकीया शाखा प्रचालिता । तस्यापि षट् शिष्याः समभूवन् ।

पौष्यञ्जिशिष्येष्वन्यतमो लौगाक्षिरभूत् । अयं सामवेदीयशतशाखाध्यायी बभूवाचार्यः । एतदीयं काठकगृह्यसूत्रं प्रसिद्धम् । आर्षाध्यायः, उपनयनतन्त्रम्, प्रवराध्यायः,

श्लोकदर्पणश्चेत्येते ग्रन्था अप्येतदीया एव । अस्य षट्सु शिष्येषु राणायनिः प्रामुख्यं भेजे । अस्य द्वौ शिष्यावभूताम् । तयोरन्यतरस्य शृङ्गिपुत्रस्य शिष्यत्रयमभूत् । पौष्यञ्जिशिष्येषु कुथुमिरप्येकतमो बभूव । तस्य त्रयः शिष्या जाताः ।

हिरण्यशिष्येष्वन्यतमः कृतनामा प्रधानो बभूव । कार्तकौजपादिगणे (६, २, ३७) यः खलु कार्तचरणः समुल्लिखितः, तस्याचार्य आसीत् पौरवः कृतो राजपुत्रः कोसलाधिपतिहिरण्यनाभशिष्यः । आचार्येण कृतेन स्वशिष्याणां द्वारेण प्राच्यदेशेषु सामवेदस्य चतुर्विंशतिसंहिताः प्रचारिताः । यजुर्वेदस्य प्रचारादिविषये यादृशः पुरुषार्थो वैशम्पायनेन समनुष्ठितः, सामवेदस्य प्रचारादिविषये तादृश एव पुरुषार्थ आचार्येण कृतेन प्रदर्शितः । अस्य चतुर्विंशतिसंख्याकाः शिष्या अभूवन्निति वायुब्रह्माण्डपुराणे ।

पौष्यञ्जिः कृतश्च ( कृतिर्वा ) सामसंहिताविकल्पकावुक्तौ वायुपुराणे (६१, ४८)—

सामगानां तु सर्वेषां श्रेष्ठौ द्वौ तु प्रकीर्तितौ ।
पौष्यञ्जिश्च कृतिश्चैव संहितानां विकल्पकौ ॥ इति ।

इत्थं जैमिनीयशिष्यपरम्पराका बहव आचार्या यद्यपि पुराणेषु निर्दिश्यन्ते, तथापि सामवेदसंहिताया बह्वीनां शाखानां विलोपात् तेषां तेषामाचार्याणां नामोल्लेखो नावाप्यते ।

लाट्यायनश्रौतसूत्रे ( ६, ९, १४ ) शौचिवृक्षाख्यस्याचार्यस्य नाम दृश्यते । सामवेदीय उपाकर्माङ्गतर्पणे कस्याश्चित् सामवेदीयशाखायाः प्रवर्तकस्य सात्यमुग्राख्यस्याचार्यस्य नाम निर्दिश्यते । महामुनिना पाणिनिना ताभ्यां प्रवर्तितयोः सामशाखयोरुल्लेखो व्यधायि 'दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम्' ( ४, १, ८१ ) इति सूत्रे । मशकस्य श्रौतसूत्रे शौचिवृक्षेरुद्धरणं समुपलभ्यते । एतदीया शाखा राणायनीयसंहिताया उपविभागरूपाऽभवत् । तत्र द्वावेवार्धमेकारमर्धमोकारं च स्वीकृतवन्तावन्यत्र दुर्लभौ— 'ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते—सुजाते एश्वसूनृते, अध्वर्यो ओद्रिभिः सुतम्, शुक्रं ते एन्यद्, यजतं ते एन्यद् इति । पारिषदकृतिरेषा तत्रभवताम् । नैव हि लोके नान्यस्मिन् वेदेऽर्ध एकारोऽर्ध ओकारो वास्ति ।' ('एओङ्' 'ऐऔच्' इति प्रत्याहारसूत्रमहाभाष्यम् ) ।

क्रतूक्थादिसूत्रान्ताट्ठक् ( ४।२।६० ) इत्यस्मिन् पाणिनीये सूत्रे महाभाष्यकारो भगवान् पतञ्जलिरुक्थशब्देन सामवेदमभिप्रैति—'उक्थादीत्युच्यते । कान्युक्थानि ? सामानि । यद्येवं सामगमात्रे औक्थिक इति प्राप्नोति । नैष दोषः, तादर्थ्यात् ताच्छब्द्यं भविष्यति—उक्थार्थमुक्थम्' इति । कैयटेनोक्थस्यार्थ इत्थं स्पष्टीकृतः—'सामलक्षणं प्रातिशाख्यं शास्त्रमित्यर्थः ।' नागेशोऽपि तथैव प्रतिपेदे—'औक्थिकाः=प्रातिशाख्यविदः, तेषामाम्नायः प्रातिशाख्यमेव । सम्प्रति सामवेदस्य चत्वार्येव प्रातिशाख्यानि लभ्यन्ते— १. सामतन्त्रम्, २. पुष्पसूत्रम्, ३. ऋक्तन्त्रम्, ४. अक्षरतन्त्रं चेति । न तान्युक्थशब्दभाञ्जि । अप्रगीतमन्त्रसाध्यस्तोत्ररूपोऽर्थ उक्थशब्दस्य ( द्र० ऋ० १, १७, ५; १, १७, १४;

१, २७, १२; १, ८४, ५; ३, १४, ७, छान्दो० १, ७, ५) । उक्थशब्दश्छन्दोविशेषतामभजत् कालान्तरे । ऋग्वेदसंहिताया यासामृचां समूहस्य पाठो होत्रा कस्मिंश्चिद् विशिष्टेऽवसरे क्रियते, स शस्त्रपदेनाभिधीयते । एवमेवोद्गातृगेयानां साम्नां संग्रह उक्थपदेनाभिधीयते । उक्थानां निश्चयः सामवेदीयचरणपरिषद्भिः क्रियते स्म कर्तव्यतया । तदर्थं यो ग्रन्थः क्रियते स्म, स उक्थ इति संकीर्त्यते स्म । उक्थाध्येतार औक्थिका भवन्ति स्म ।

पाणिनेरनुसारेणापि सामवेदसंहिताया भागद्वयमभूत्—आर्चिको गेयश्चेति । 'द्व्यजृद्०' (४।३।७२) इत्यत्र पूर्ववर्तिन आर्चिकस्योल्लेखः, 'भव्यगेय०' (४।३।६८) इत्यत्र च गेयस्य । काशिकायां 'गेयानि माणवकेन सामानि' इत्युदाहृतम् । 'छन्दोगौक्थिक०' (४, ३, १९) इत्यत्र पाणिनीये सूत्रे छान्दोग्यस्य चरणस्य समुल्लेखो वर्तते । कालान्तरे सामवेदस्यायमेव चरणः प्राधान्यमादधे । इत्थं 'सहस्रवर्त्मा सामवेदः' इति पतञ्जल्युक्तिः सहस्रसंहितापरा ।

तत्र तिस्र एव संहिता उपलभ्यन्ते सामवेदस्य साम्प्रतम्—१. कौथुमसामवेदसंहिता, २. राणायनीयसामवेदसंहिता, ३. जैमिनीयसामवेदसंहिता चेति । कौथुमशाखीयसामवेदसंहितायां सायणभाष्यं समुल्लसति । कौथुमी गुर्जरेषु, राणायनीया महाराष्ट्रेषु, जैमिनीया च कर्णाटकेषु प्राप्तप्रचाराऽभूत् । कौथुमसंहितायाः सायणभाष्याधारक आङ्ग्लानुवादो हिन्द्यनुवादोऽपि जातौ । राणायनीयसामवेदसंहिता १८४२ तमे खीस्ताब्दे जे० स्टीवेन्सनमहोदयेन सानुवादा संपादिताऽभूत् । रायल एशियाटिक सोसाइटीतः सत्यव्रतसामश्रमिमहाभागानां संपादकत्वेऽपि प्रकाशिता सा । १९३८ तमे खीस्ताब्दे डॉ० रघुवीरस्य प्रयासेन सामवेदीया जैमिनीयसंहिता लवपुरीतः प्रकाशमायाता । तत्र जैमिनीयमन्त्राणां कौथुमसंहितायां क्रमस्तुलितः । पर्यन्ते सम्पादकेन जैमिनीयपाठसाधीयस्त्वेऽनिश्चयोऽपि प्रकटितः—'यावद् इतरहस्तलेखा नोपलभ्यन्ते, यावच्च जैमिनीयानां मानग्रन्था ब्राह्मणादिकं च नोपस्थितं तावन्न निश्चेतुं शक्यते—कः पाठो जैमिनीयानां साधीयान् इति' इति । किन्तु तेन महानुभावेन सामवेदीयं जैमिनीयतलवकारब्राह्मणं १९३७ तमे खीस्ताब्द एव संपाद्य प्रकाशितम् । ततोऽपि पूर्वं १८७८ तमे खीस्ताब्दे बर्नेलमहोदयेन जैमिनीयब्राह्मणम् (आर्षेयब्राह्मणम्) संपादितम् । १९२१ तमे खीस्ताब्दे च एच्० एर्टलमहोदयेन जैमिनीयमुपनिषद्ब्राह्मणं (छान्दोग्यब्राह्मणम्) संपादितम् । इतोऽतिरिक्ताः सामवेदीयान्यशाखाद्वयसंबद्धा दशसंख्याका ब्राह्मणग्रन्थाः प्रकाशितचराः सन्ति ।

सामवेदसंहिताया इतरसंहिताभ्यो वैशिष्ट्यं मुख्यतो गानप्रकारे जायते । अतः सामवेदसंहितान्तर्गतार्चिकभागाद् भिन्नः स्तोभाख्यो गानभागो भवति । तत्र संहिताभागीयमन्त्राणां गानानि सप्तस्वरप्रकारेण निबध्यन्ते । तदुक्तं बृहदारण्यकोपनिषदि—'सा च अमश्चेति तत्साम्नः सामत्वम्' (१, ३, २२) । 'सा' इत्यनेनर्चः, 'अम' इत्यनेन च गन्धारादिस्वरो गृह्यते । एवं तावद् ऋचो गानस्वराश्च संभूय सामत्वेन व्यपदिश्यन्ते । ऋचः खलु पत्नीस्थानाः, स्वरश्च पतिस्थानः ।

साम्नः स्वर एव स्वं भवति। गीतौ स्वरस्य प्राधान्यं कस्याविदितम्। 'अर्थैकत्वाद् विकल्पः स्यात्' इति जैमिनीयसूत्रव्याख्याने स्वरविशेषाणामभिव्यञ्जिका सामशब्दाभिलप्या गीतिर्व्याहृता, या नियतप्रमाणायाम् ऋचि गीयते। तत्संपादनार्थोऽयमृगक्षरविश्लेषः, विकर्षणम्, अभ्यासः, विरामः, स्तोभ इत्येवमादयः सर्वे सामवेदे समाम्नायन्ते। तत्र सामगाने क्रुष्टप्रथम-द्वितीय-तृतीय-चतुर्थ-मन्द्र-अतिस्वार्यभेदेन सप्त स्वरा भवन्ति। ते चोत्तरोत्तरं नीचा जायन्त इति क्रुष्टस्वरस्योच्चैस्तमत्वं स्पष्टम्। तेषां विन्यासक्रमोऽङ्गुलिषु परम्परया भवतीति नारदीया शिक्षा। प्रत्युत्क्रम-अतिक्रम-कर्षण-स्वारा विनत-प्रणत-उत्स्वरित-अभिगीताश्चावान्तरस्वराः। पूर्वेषामङ्गुलिषु योजनम् अङ्गुष्ठेन करणीयं भवति। उत्तरवर्तिनां क्रमो भिन्नः। स्वरगताः पञ्च श्रुतयोऽपि भवन्ति— १. मृदुः, २. मध्या, ३. आयता, ४. दीप्ता, ५. करुणा चेति। गान्धर्वशास्त्रेऽपि श्रुतयो वर्णिताः। गाने स्वरस्य प्राधान्यं भवत्येवेत्येतदर्थं महाभारते (३,१४२,६) मरीचिपुलहभृग्वङ्गिरसां पुण्यनिःस्वनत्वमभिहितम्। तत्र हा३वु हा३वु हा३वु अहमन्नम् इति गीयमानं साम श्रूयते। मरीच्यादयोऽत्र सार्वात्म्यं स्वस्य पश्यन्तो गायन्ति—

अत्र साम स्म गायन्ति सामगाः पुण्यनिःस्वनाः।
मरीचिः पुलहश्चैव भृगुश्चैवाङ्गिरास्तथा ॥ इति।

सामावयवभूतस्य स्तोभाक्षरस्य महिमेत्थं वर्णितश्छान्दोग्योपनिषदि—'अयं वाव लोको हाउकारो वायुर्हाइकारश्चन्द्रमा अथकारः। आत्मेहकारोऽग्निरीकारः। आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः, प्रजापतिर्हिंकारः' (छा० १,१३,३) इति। प्रतिसंहितं प्रतिशाखं वा सामगानस्य सत्ताऽवश्यमभूत्। सम्प्रति तु कौथुमशाखीयं सामगानं (भागद्वये ग्रामगानात्मकम् आरण्यगानात्मकं च) इतश्चतुस्त्रिंशद्वर्षेभ्यः प्राक् श्री रा० नारायणस्वामिदीक्षितेन संपादितम्, औंधनगरस्थात् स्वाध्यायमण्डलाच्च प्रकाशितमभूत्। जैमिनीयं सामगानं नेतः पूर्वं क्वचित् प्रकाशितमभूत्। इहाग्नेयम् ऐन्द्रं चेति पर्वणी द्वादशखण्डात्मके। बृहत्यं पर्वाष्टखण्डात्मकम्। षट्खण्डात्मकोऽसावि-पाठः। कौथुमीयसामवेदसंहितातः जैमिनीयसामवेदसंहितापाठे सर्वथा भेदो नास्ति। सामगानस्य प्रकारस्तु सर्वथा भिन्नः। यथात्र १७६ तमे पृष्ठे—

प्रत्यस्मै पिपीषते विश्वानि विदुषे भर।
अरङ्गमाय जग्मये पश्चादध्वनेः नरः ॥

इत्यस्य साम्नो गाने—

पिपीषते = पिपाहावु; ओइषा ताइ; विश्वानि = वाइश्वानी; विदुषे = वाइदूषे हाइ; भर = भारा। अरङ्गमाय = आरङ्गमाया, जग्मये = जाहाग्मायाय, अपश्चादध्वनेः = पाश्चाद्दा औहोवा धोने; नरः = नराः—इति विशेषः। स्वराणां परिवर्तनाय सामतन्त्रमक्षरतन्त्रं च विलोकनीये। अस्मिन् साम्नि 'पिपीषते' इति पदस्य मध्ये 'हावु ओइ' इति, 'विदुषे' इति

पदस्यान्ते 'हाइ' इति, अपश्चाद् इत्यस्यान्ते–'औहोवा' इति स्तोभाक्षराणि विलसन्ति। इह जैमिनीये सामगाने 'ओइह्वा, ईहा, औहो, यौहोवा, आइहो, ओइ, ओ वा, ओहाइ, ओहा, ओहाए' इत्यादयः स्तोभस्वरास्तुलनीयाः। १८० तमे पृष्ठे कौथुमीयसामवेदसंहिताया मन्त्रक्रमाद् भिन्नः क्रमो जैमिनीयसामगानस्य।

प्रकाश्यमानस्यास्य जैमिनीयसामगानस्य हस्तलेखो म० म० अनन्तकृष्णशास्त्रि-महोदयानां प्रयत्नेन सरस्वतीभवनपुस्तकालयाय क्रीतः। अयं खलु तालपत्रेषु ग्रन्थलिप्यां लिखितोऽभूद् ऊहाभ्यूहेतिभागद्वयात्मकः। तत्र प्रतिवर्णं स्वरा नाङ्किताः। मन्त्रसमाप्तौ संभूय स्वरा विन्यस्ता अभूवन्नक्षररूपाः। तानिह वाराणस्यां यथास्थानं केऽपि नाशकन् योजयितुमिति शास्त्रिवर्याः प्रार्थिता यत् ते हस्तलेखस्य प्रतिलिपिं देवनागर्यां कारयेयुः, प्रतिवर्णं च स्वरान् योजयेयुः। केरलानुपेत्य तैरेकस्य भागस्य सस्वरा प्रतिलिपिर्देवनागर्यां कारिता (अस्य स्वराणां विषये अ० मु० रामनाथदीक्षितमहोदयस्य भूमिकेहाग्रे द्रष्टव्या)। तस्यास्य भागस्य सम्पादनं भूतपूर्वोपग्रन्थाध्यक्षेण श्रीविभूतिभूषणभट्टाचार्येण कृतम्। द्वितीयो भागो नेदानीमपि लिप्यन्तरं प्राप्तो न च यथास्थानं स्वराङ्कित एव समजनीति तथैव वेष्टनावगुण्ठितो विषीदति पुस्तकालये।

श्रीविभूतिभूषणभट्टाचार्यस्य महतायासेन सामगानमिदं भवतां पाणिपुटके समुपह्रियमाणं विराजते। अप्रकाशितचरस्यैतस्य कौथुमीयसामगानेन समुपलप्स्य-मानैरन्यैश्च गानैः सह तुलनात्मकमनुशीलनं महते लाभाय भविष्यतीति ध्रुवं विश्वसिति।

गङ्गादशहरापर्वणि
२०३३ वैक्रमाब्दे
७-६-७६ खीस्ताब्दे
चन्द्रवासरे

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः
अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

श्रीः

# भूमिका

सप्तस्वरैः समस्तं यो जगदेतच्चराचरम् ।
सञ्जीवयति विश्वात्मा स मे विष्णुः प्रसीदतु ॥

सृष्टेरारभ्य षड्भिर्द्वीपान्तरैः परिवृतं नववर्षोपशोभितं जम्बूद्वीपं नित्यसिद्धैर्मन्त्रार्थवादब्राह्मणालङ्कृतैर्नानाप्रकारैराम्नायैर्मधुरकण्ठस्वराविष्कृतैः पवित्रयांचक्रुर्महर्षयः तत्सन्ततिजाता ऋषिकल्पा वैदिककुलवरेण्याः श्रोत्रियाश्च । इतिहास-पुराणादिभ्यो जानीमो यत् द्वीपान्तरेष्वपि महर्षिभिस्तपसा लब्धं वेदज्योतिरास्तिकानां हार्दतमोभेदमकरोदिति । वाल्मीकीये श्रीमद्रामायणे सुन्दरकाण्डे लङ्काप्रभातवेलावर्णनप्रसङ्गे प्रकीर्तितम् "शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम्" इति । प्रभातवेलायामध्ययनं भारतेऽप्यासीदिति कविकुलचक्रवर्तिनः काव्याद्रघुवंशादपि जानीमः । एवं हि प्रभातवेलां वर्णयति "तच्छिष्याध्ययननिवेदितावसानां संविष्टः कुशशयने निशां निनाय" इति । अस्मद्गुरवोऽप्यस्मान्बाल्यावस्थायामुषसि प्रबोध्य समग्राहयन्वेदम्, निघण्ट्वादि च । भागवते द्वीपान्तरविवरणप्रकरणे नानाविधैर्वैदिकैर्मन्त्रैस्तत्रत्याः प्रजाः प्रसिद्धान्देवानर्चयामासुरिति दरीदृश्यते । परमात्मनः निःश्वासभूतस्य वेदस्य तदुदितस्य धर्मजातस्य विनाशं चिकीर्षवो राक्षसा अपि व्यर्थप्रयत्ना अभवन् । विनेशुस्त एवान्यथापाठैरनुष्ठानैश्च । वेदरक्षायै वीतरागोऽपि परमेश्वरः तत्र तत्रावतीर्य सज्जनानां हस्तावलम्बीभूतः संपूर्णमनोरथो बभूव । द्वीपान्तरेष्ववैदिकानां क्षितीशानां धर्मविमुखानामश्रद्धयावहेलनया च तत्रत्याः श्रुतयोऽन्तर्हिताः । भारते एव साम्प्रतं वेदस्य प्रकाशो जागर्ति । वेदस्य भायां रतः प्रदेशः भारतमभूदित्यपि पदनिर्वचनं नातिशयोक्तिः । इत एव प्रकाशः साम्प्रतं देशान्तरं गत्वा भारतस्य गौरवं रक्षति ।

कालत्रयाभिज्ञो मनुरपि स्मरति "एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः" इति । मानवानां चरितमकृत्रिमेभ्यो वाक्येभ्योऽधिगत्य महीसुरा ब्रुवते न स्वमनीषाकल्पितेभ्य इति चरित्रेषु तत्प्रकाशनपरेषु नरेषु कृतश्रद्धा बभूवुः सर्वे मानवाः पार्थिवाश्च । कालेनायं क्षीणो वेदोऽधुना परिगणितान् द्विजानाश्रित्यैकेन पदा तिष्ठन्तपस्तपतीव भाति । बाह्यैरविद्याप्रकल्पितैः पदार्थैः प्रच्छन्नः परमात्मेव न प्रकाशते । कथंचित् श्वसिति । वैदेशिका अपि वेदार्थपरिष्करणपरा नवीनान् लेखानाम्नायमधिकृत्य मधुरया प्रसन्नयाऽऽत्मभाषयाविष्कुर्वन्ति । भारतीयाः पुनस्तत एव वेदार्थं समधिगच्छन्ति । यास्कमहीधरसायणाचार्यादिभिः प्रमाणपूर्वकमुपस्थापितमर्थं न विश्वसन्ति । अस्तु, कालस्यायं स्वभावः । समागमिष्यति च पुनः कृतयुगः । तावद्वैदिकैर्यावच्छक्ति संरक्षणीयो वेदः ।

अधुना हि वैज्ञानिको युगः। सर्वे नराः प्रज्ञाबलेन सुखसाधनभूतान्नवीनान्पदार्थाना-विष्कुर्वते। तानात्मसात् कर्तुं वाञ्छति मुग्धो लोकः। पदार्थाविष्करणे चाहमहमिका विलोक्यते। सुखसाधनत्वेनाभिमतः पदार्थः कालान्तरे दुःखसाधनं भवन्मनसो निर्वेदमा-जनयति। निर्विण्णः पुरुषः पुनः सुखोपलब्धये मतिवैभवमेव शरणीकरोति न त्वहैतुकं वाक्यम्। कदापि नित्यं सुखं कर्मसाध्यं न भवति। वैदिकं धर्ममनुष्ठाय जीवः स्वर्गं गतोऽपि भोगेनापूर्वं क्षपयित्वा पुनर्योनिमेवापद्यते जन्मने। अतो महर्षय आगमापायिषु वैषयिकेषु सुखा-दिषु पराङ्मुखा आत्यन्तिकानन्दावाप्त्या आत्मज्ञाने प्रावर्तन्त। त एतदपि जानते प्रज्ञाबलेन निर्मितानां पदार्थानामियत्ता वर्णनमार्गमतीता। न तत्र पूर्णता भविष्यति पारमार्थिकं ब्रह्मैकमेव। तदात्मना स्थितिं विहाय नान्यः पन्था विद्यते सुखायेति। अतस्तदन्वेषणपरा अभूवन्। तस्य च साधनं वैदिकं वचः। प्रमाणान्तराविषयसुखदुःखप्राप्तिपरिहारसाधनप्रति-पादनं शब्दराश्यात्मना स्थितो वेदः कर्तुं प्रभवति। अलौकिकस्य शब्दस्य महिमा सम्प्र-दायविदा शबरस्वामिना मीमांसासूत्रभाष्ये प्रकाशीकृतः "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुम्"[१] इति। ततो नात्र सन्देहः कर्तव्यो वेदोक्तः पदार्थः पुरुषार्थसाधनं भवेन्न वेति।

शास्त्रोक्तप्रकारेण कर्माकरणात्फलानिष्पत्तौ भवति सर्वेषामविश्वासः क्रियासु वेदप्रति-पादितासु। अन्यथाकरणरूपं स्वकीयं दोषं प्रच्छाद्य निष्फलतां कर्मस्वारोप्य, आलस्याद्वा वैदिकानां पदार्थानामननर्ति चिकीर्षन्ति बहवः। अन्ये च तेषां व्याख्यानचातुरीवशीकृत-बुद्धयो वेदपराङ्मुखा जाताः। वेद एवैतेषु कर्मसु श्रद्धावहेलना श्रुता। तथाहि दर्शपूर्णमास-योराम्नायते "ततोऽश्रद्धा मनुष्यान्विवेश, ये यजन्ते पापीयांसो भवन्ति, य उ न यजन्ते श्रेयां-सस्ते भवन्ति" इति[२]। श्रुतेरयमर्थः—पूर्वं समन्त्रकं वेदिं निर्माय बर्हिषास्तीर्यते वेदिः[३]। तदनु वेदिः स्पर्शार्हा भवति। आस्तरणात्प्राक्संस्पर्शे वेद्यपूर्वो नष्टस्सन् परानेनसा संयोजयति। एनसः फलं दुःखमेव। इममर्थमविद्वांसः केचन श्रौत्रियपुङ्गवा निर्माय वेदिमस्प्राक्षुः। तत उत्थितं पापं लब्ध्वा पापीयांसोऽभूवन्। ये च कर्मण्यप्रवृत्ता मानवास्तेषां वेदिस्पर्शाभावाद् दुष्कृतं नाभूत्। ततश्च कार्यान्तरानुष्ठानेन लब्धख्यातिधनपूजाः सर्वेषां श्रोत्रियाणामनुकर-णीया अभूवन्। तानवलोक्य गतानुगतिको लोको वैदिकेषु कर्मसु वेदाध्ययनेषु च प्रशिथि-लितचित्तोऽभूत्। एवं सर्वत्र नास्तिकवादे प्रवृत्ते कर्मविमुखेऽधिकारिणि जाते देवानां जीविकानिर्वाहो दुर्दशामवाप। "इतः प्रदानाद्धि देवा उपजीवन्ति" इति हि श्रुतिः। नराणां मनसि श्रद्धामुत्पादयितुं पुरोधसा बृहस्पतिना संमन्त्र्य तद्द्वारा पुनरास्तिकमार्गमानिन्युर्बु-भुक्षिता देवाः। तदेतदपि शतपथ एव श्रूयते 'ते ह देवा ऊचुर्बृहस्पतिमाङ्गिरसमश्रद्धा-

---

१. शाबरभाष्यम्।

२. शतपथब्राह्मणम् का० १, अ० २, ब्रा० ५, क० २४।

३. तदत्र पदार्थक्रमः—वेदिनिर्माणम्, प्रोक्षण्यासादनम्, इध्माबर्हिरुप सादनम्, स्रुच् संमार्गः; पत्नी संनहनम्, आज्यग्रहणम्, इध्माबर्हिः प्रोक्षणम्, बर्हिरास्तरणमिति।

वै मनुष्यानविदत् तेभ्यो विधेहि यज्ञमिति । स हेत्योवाच बृहस्पतिराङ्गिरसः । कथा न यजध्व इति, ते होचुः किंकाम्या यजामहे ये यजन्ते पापीयांसस्ते भवन्ति" "तेनानवमर्शं यजध्वं तथा श्रेयांसो भविष्यथेत्या कियत इत्याबर्हिषस्तरणादिति बर्हिषा ह वै खल्वेषा शाम्यति" इति[१] ।

बृहस्पतिसदृशा वीतरागा वैदिकमार्गप्रतिष्ठापनतत्परा महान्तः पीठाधीश्वराः समग्रे भारते क्षीणं वेदज्योतिः प्रबलीकुर्वन्तस्तत्र तत्र महीं पर्यटन्ति । न हि ते ख्यातिलाभपूजा-कामाः । अस्माकमुद्धारायैव महान्तमसह्यं दुःखमनुभवन्ति । अतएव ते "जगद्गुरुः" "परम-कारुणिकः" इत्यादिपदैर्व्यपदिश्यन्ते । वेदप्रभवो ह्यैहिकामुष्मिकानन्दः । तदेतज्जानन्तः प्राचीना द्विजाः स्वतनयमष्टवर्षमुपनीतं श्रुतिं ग्राहयामासुः । शास्त्रं चोपदिशति "वेद एव द्विजातीनां निःश्रेयसकरः परः" इति ।

आर्या महर्षयो दीर्घद्रष्टारो लोकयात्रानिर्वाहार्थं कांश्चन पथः निरचिन्वन् येषां "संस्कारः" इति नामान्तरमस्ति । जीवस्य मुख्यं लक्ष्यं स्वात्मनास्थितिः दुःखात्मका-त्संसाराद्विमुक्तिलक्षणा । तस्यै स्थित्यै पापानि प्रतिरोधकान्यभूवन् । तेषां पापानां निवृत्यै संस्काराः स्मृतिभिरुपदिष्टाः । गौतमो ह्येवमाह-यस्यैतेऽष्टाचत्वारिंशत्संस्कारा अष्टावात्म-गुणाश्च स मुक्तो भविष्यतीति । तेषु संस्कारेषु मुख्यः संस्कारः "उपनयनम्" । अद्य किल सर्वत्र छात्रेषूच्छृङ्खलतानुभूयते । सा ह्यागन्तुको दोषः । नैषा प्राचीने काले श्रूयते । तत्र च कारणं संस्कारेण संस्कृतानां वटूनां मनः प्रसीदति । उपनयनमित्यस्य "गुरुकुलप्रवेशो विद्यावाप्त्यै" इत्यर्थः । तथा हि छान्दोग्यब्राह्मणे मन्त्रब्राह्मणापरनामके केचन मन्त्राः समाम्नाता उपनयनसंस्कारप्रकरणे "ब्रह्मचर्यमागामुप मा नयस्व, को नामासि ?, असौ नामास्मि, देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ" इति । एषां मन्त्राणां विनियोगक्रमः—प्रथमं मन्त्रं वटुराह यस्य चायमर्थः हे आचार्य ! अहं ब्रह्मचर्यम्, ब्रह्म वेदः तस्य चर्यं चरणमनुष्ठानम् । अत्र तदधिकारसाधनं व्रतं तेन ब्रह्मचर्य-पदेनोच्यते । तदागामाप्तवानस्मि । प्रागुपनयनात्कामचारः कामवादः कामभक्ष आसम् । तत्सर्वमिदानीमत्यजम् । अतो मा मामुपनयस्व तव समीपं प्रापयाध्यापनार्थम् ।

यत्त्वत्र "[२]ब्रह्मचर्यं मैथुननिवृत्तिं अहमागाम्" इति गुणविष्णुना मन्त्रब्राह्मणग्रन्थे ब्रह्मचर्यपदार्थो विवृतस्तदसाधु मन्ये । अष्टमे वयसि वर्तमानस्य बालस्य कथं वा ग्राम्यधर्मे प्रवृत्तिः स्यात्, यतो निवृत्तोऽहमिति वदेद् बालः । ज्ञातास्वादो युवतिं को विहातुं समर्थः । अतः सायणाचार्याभिमतोऽर्थो ग्राह्यः । अक्लिष्टमिमं सायणार्थं पारस्करगृह्यसूत्रव्याख्याता गदाधरो जग्राह । अस्तु ।

विनीतेन शिष्येण प्रार्थित आचार्यः पृच्छति को नामासि—किंनामा भवसि, इति प्रतिब्रूते वटुः "असौ नामास्मि सावित्रो विनायकशर्मा नामास्मि" इति । यदि छात्रं

---

१. शतपथब्राह्मणम्, १, २, ५, २५ ।

२. मन्त्रब्राह्मणभाष्यं कलिकातामुद्रितम् ( पृ० सं० ७६ ) ।

गुरुकुलप्रवेशार्हं मन्यते गुरुस्तदा माणवकस्य दक्षिणं पाणिं साङ्गुष्ठं दक्षिणेन पाणिना गृह्णीयात् । एतद्ग्रहणमेवोपनयनं भवति । आचार्यः प्रविष्टं छात्रमनुशास्ति "ब्रह्मचार्यसि विनायकशर्मन्, अपोशान, कर्म कुरु, मा दिवा स्वाप्सीः" इति[१] । एषा स्थितिः छन्दोगानाम् । सर्वेऽपि गृह्यसूत्रकाराः प्रकरणेऽस्मिन् माणवकाञ्जलिग्रहणं माणवकालिङ्गनं वा विदधते[२] । कुत्रचिदाचार्येण पठनीये मन्त्रे उपोपसृष्टनयतेः प्रयोगः । तथाहि—एकाग्निकाण्डे "देवस्य त्वा सवितुः प्रसव उपनयेऽसौ" इति[३] । पारस्करप्रभृतयो लोकमर्यादारक्षका आचार्या गुरुकुलप्रविष्टमन्तेवासिनमनुशासते[४] । यस्योल्लङ्घनेन न केवलं छात्राणामेव हानिः परं समाजस्यापि । बाल्ये वयसि यद्यं भावस्संजायेत मनसि स्वेच्छाप्रवृत्त्या सत्याग्रहेण वा सर्वाः प्रजा वशमानेष्यामीति स एव व्यवहारकाले रूढमूलः सर्वानन्यान्क्लेशयेत् । सर्वेऽपि स्वच्छन्दःप्रवर्तका यदि भवेयुः कथं लोकयात्रा चलेत् । अतो बाल्ये एव वयसि दान्ततां शान्ततामुपरतिं तितिक्षां च ग्राहयन्ति । तदेताभिस्सह वेदाध्ययनंशास्त्राध्ययनंभाषाग्रन्थाध्यनं लोकव्यवहारकौशलाधायकविद्याध्ययनं वा तपःशब्देन व्यवहरन्ति । तत्र वेदाध्ययने मुख्यः तपश्शब्दः । एवं हि श्रूयते "स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः" इति । इतरत्र तत्सामान्यात्तपःशब्दो भाक्तः ।

ब्रह्मज्ञानार्थं ज्ञानिसमीपमागतस्यापि जनस्योपनयनं भवति । छान्दोग्योपनिषदि श्रूयते स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति समिधं सौम्याहरोप त्वा नेष्ये" इति तथा चान्यत्र "अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तं होवाच यद्वेत्थ तेन मोपसीद् । ततस्त ऊर्ध्वं वक्ष्यामि" इति । "ब्रह्मपरा ब्रह्मनिष्ठा परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः" इति । कुत्रचिदपूर्वाणां क्षत्रियज्ञातानां ब्रह्मविद्यादीनां ग्रहणाय क्षत्रियोऽपि गुरुरग्रजन्मनाभ्यर्थ्यते । यावदध्ययनं क्षत्रिये गुरुवृत्तिर्ब्राह्मणस्य । तदेतत्सर्वं विचारयतां मनसि स्वयमेव भासते समाजसेवार्थमेव नियमाः प्रावर्तन्त इति ।

उपनयनान्तरं नित्यं कर्म सन्ध्यासमिदाधानभिक्षाचरणमनुतिष्ठन्तमुत्तरायणे हरिशयनात्पूर्वं वेदव्रतमुपक्रम्य श्रावण्यां पूर्णिमायां श्रवणे हस्ते वक्ष्येऽध्यायानामुपाकृतिं विधाय स्वाध्यायमध्यापयति गुरुः । गुर्हि मन्दमतीनां बालानां बुद्धिबलमवलोक्य पदशः द्विपदशः त्रिपदशो वा स्वाध्यायमुपदिशति । प्रथमदिनवाग्व्यापारो गुरोरुपदेशपदार्थः । तदनु दुष्टास्तिथीर्वर्जयित्वा यावदनुवाकं वर्गं कण्डिकां दशतिं वा शिष्योऽनुवक्तुं समर्थो भवति तावत्प्रतिदिनं तमेव भागमाचार्यः सकृदुच्चरति । माणवको वारद्वयमनुवदति । एवं

१. छा० ब्रा० १-५

२. पार० गृ० सू० २-२-१९-२२

ब्रह्मचार्यस्यपोशान कर्म कुरु मा सुषुप्थाः । भिक्षाचर्यं चराचार्याधीनो भव इत्यन्यत्र ।

३. एकाग्निकाण्डम् २-३-५

क्रमेण पच्छः, अर्धर्चशः, समग्रामृचं प्राध्यापयति प्रमादादि विहाय गुरुः । नैतस्मिन्काले माणवकं भीषयति, ताडयति वा । कथमियं विद्या गुरोरधिगता शिष्यं संक्रमेत् ? कथं वायं बालो वेदपाठी भूत्वा समाजे जीविकानिर्वाहं श्रेयःप्रेयसी वा समाप्नुयादिति शुभचिन्तया प्रेम्णाध्यापयति । एषाहि वाक् नित्या अमृता च । एवमध्यापनं श्रुतिराह—य आतृणत्त्यवितथेन कर्णाविदुःखं कुर्वन्नमृतं संप्रयच्छन्' इति । अदुःखं कुर्वन्नित्यस्याल्पशः समग्रमित्यादि प्राक्प्रतिपादितः कश्चनार्थः । अपरोऽपि भवति-शिष्यस्य मनस्यध्ययने रुचिमुत्पाद्य निगूढार्थपरिज्ञाने दीर्घवाक्यानुवदने वा मनो न चलति चेत् तदा गूढार्थविवरणादिकं विहाय कालान्तरे निर्मले मनसि जाते तमर्थं बहुभिरुपायैः पाठयति। एकस्मिन्गुरौ विद्याग्रहणं कुर्वतां छात्राणां मनांसि विद्याग्रहणे समानानि न भवन्ति । तदेतदृचाभ्युक्तम्—

**अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।**
**आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उ त्वे ददृशे ॥ इति ।**

भवभूतिरप्याह—वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा । भवति च भूयान्भेदः फलं प्रति तद्यथा प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः'' इति ।

स्वाध्यायस्य प्राप्तिर्दृष्टं फलम् । प्राप्तिर्नाम स्वाधीनोच्चारणक्षमत्वम् । तच्च पुरुषस्य स्वाध्यायोच्चारणेच्छायामस्खलितयथावदुच्चारणोपयोगिताल्वमूर्धादिवर्णस्थानवशित्वसहिताविच्छिन्नस्मृतिसन्तानजनकतदन्तर्गतयावद्वर्णपदवाक्यावलीविषयसंस्कारदार्ढ्यम् । एतदेव स्वाध्यायधारणपदेन व्यवह्रियते । दृष्टार्थत्वाद्धेतोर्गुरुः शिष्यस्य वारं वारमध्यापनम्, आवृत्तिं च कारयति । विद्याग्रहणकाले त्वरा प्रमादः, आलस्यम्, इत्येवमादीनां दोषकारणानां सर्वथा वर्जनं भवेत् । अन्यथा प्रमादोच्चारणं भवेद्येन गुरोरपयशः निरयपातः शिष्यस्य च भवेताम् । यथावदाम्नायपाठशीलस्य पुण्या कीर्तिस्सर्वत्र प्रसरति यथा सर्वे मुदिता भवन्तीत्यार्षेयब्राह्मणमाह—यज्ञो वा अथ जज्ञ इत्याहुरेष वाव जात एषोऽवलुप्तजरायुरेष आर्त्विजीनो य एतं वेदमनुब्रूते । यदा वा एतं वेदमनुब्रूते अथ हैनं शृण्वन्त्यसावन्ववोचतेति । तद्धै स जायते' इति ।

एवमेकमध्यायं सम्यक्ग्राहयित्वा क्रमेण समग्रां शाखां पूर्वोक्तेन प्रकारेणाध्यापयत्याचार्यः । तैष्यामुत्सर्गः । पुनः श्रावण्यामुपाकर्म । काण्डान्ते काण्डव्रतम् । एवं वेदं वेदौ वेदान्वाधीते माणवकः । पूर्वजन्मसुकृतं गुरुभक्तिः इति विना वेदाध्ययने रुचिः वेदधारणं वेदार्थाधिगमो वा नो भविता । पदं पदार्थं जानन्तो मेधाविनः काव्यशास्त्रपारंगताः कदाचिद्गृहीतं विस्मरन्ति, क्रमभेदं कृत्वा वा व्याहरन्ति । परमर्थानभिज्ञाः बाला वेदं यथावदनुब्रुवन्ति समानकण्ठघोषेणेति परमं विस्मयकरमेतद्भाति ।

यस्तु गृहीतं वेदं प्रमादालस्यादिभिर्विस्मरति स ब्रह्महा भवति । केवलं ब्राह्मणहननेन न ब्रह्महा, परं ब्रह्मणो वेदस्य हननं विस्मरणं च ब्रह्महा पदार्थः ।

अध्ययनकाले मेधाविनां पटूनां मनस्ययमभिमानोऽप्यनुपदिष्टः पदमादधाति—सर्वेषु सतीर्थ्येषु पटुरहमस्मि। मामनुकर्तुमसमर्था अन्ये छात्राः। गुरुर्मह्यं स्निह्यति। अहमेव गुरोः प्रेमपात्रम्। अन्ये मूर्खा इति। तदेतदुपनिषदि छान्दोग्ये सम्यग्वर्णितम्। तत्र ह्येषाख्यायिका। आरुणेयः श्वेतकेतुरास। बाल्यादेवाविनीत इति भाति। वेदाध्ययनयोग्यं वयः प्राप्तस्य वेदस्वीकरणे तस्य मतिर्न प्रासरत्। आत्मनः पुत्रं सर्वशास्त्रपारंगतं चिकीर्षुः पिता मनस्यालोचितवान्। यद्ययं पितृकुले स्थास्यति मातृप्रेम्णा दुष्टो भविष्यति। अतोऽन्यस्माद्गुरोरस्य विद्याभ्यासो भवतु। अन्यः किल संताड्य सन्मार्गमानेष्यति। ततः पुत्रमुवाच "सौम्य! अस्मद्वंशीयाः सर्वे विद्वांस आसन्। विदुषा भवता भवितव्यम्। योग्यमाचार्यं निर्णीय वस ब्रह्मचर्यम्" इति। पितुरुपदेशादन्यस्मिन्गुरौ द्वादशवर्षं ब्रह्मचर्यं चरित्वा समस्तवेदं साङ्गं सार्थं यथावदधीत्य संपूर्णप्रज्ञो जातः। मनसि चैवं कलयामास समस्तशास्त्रार्थवेत्ताहं जातः। कोऽस्त्यन्यः सदृशो मया। मामधिकृत्यैव श्रुतिरियं चरितार्था भूत् "नैनं हिन्वन्त्यपि वाजिनेषु[1]" इति। तदेतत्सर्वं श्रुतिरप्याह "स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय" इति[2]।

गृहागतं पुत्रमालोक्य विचारयामास पिता "नित्यादिकर्मणामनुष्ठानं समाजपीडाकराणां कर्मणां वर्जनं च बोधयति ज्ञानम्। अस्य तु शास्त्रज्ञानं विपरीतमेव जातम्। एनं विनीतमहं करिष्ये" इति। स्तब्धं पुत्रं पप्रच्छ श्वेतकेतो! यन्नु सौम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति। श्रुत्वैतच्चकितो मनस्याकलयत् "हन्त पितुः प्रश्नस्योत्तरं न जानामि। वृथा जातो मम गुरुकुलवासः। कथमेतद्भवितुमर्हति घटस्यैकस्य ज्ञानेन पटादीनां ज्ञानम्। अतो मूढोऽस्म्यहम्। धिङ्मामनार्यपथगामिनम्" इति। तदैव वीताभिमानः पितरं पप्रच्छ ज्ञानावाप्त्यै "कथं नु भगवः[3] स आदेशो भवति" इति। अतः विद्याप्राप्त्या सहाशिक्षितमागतमभिमानं त्यक्त्वा विनीतो भूत्वा सुखमात्मनोऽन्येषां च संपादनीयम्।

क्वचिन्महर्षीणामभिमानो विद्याजो महते फलाय कल्पत इत्यप्यनुशुश्रुम। तथाहि पूर्वं वेदव्यासस्य शिष्याद्वैशम्पायनाद्बहवो यजुर्वेदमधीतवन्तः। तेषु प्रगल्भो याज्ञवल्क्योऽप्यास। गुरूपदिष्टं समस्तमर्थं सकृदेव जग्राह यत्रान्येऽसकृद्बोधनेन। गुरोरपि याज्ञवल्क्ये प्रीतिरुदभूत्। कदाचिद्वैशम्पायनं पापमाजगाम। दुरितनिवृत्त्यै कस्य चित्कर्मणोऽनुष्ठानं वेदोक्तं विज्ञाय शिष्यानाज्ञापयामास तदनुष्ठानाय। मेधावी याज्ञवल्क्यः सहसा प्रोचे

---

१. "वाचाभिनाः ईश्वराः सभासु प्रगल्भा वा वाजिनाः। तेषु मध्येऽपि एनं वेदार्थकुशलं चोदयितुं न हिन्वन्ति न केऽपि प्राप्नुवन्ति। तेन सह विवदितुमसमर्थत्वात्" इति सायणः।

२. महामनाः महद्गम्भीरं मनो यस्यासममात्मानमन्यैर्मन्यमानं मनो यस्य सोऽयं महामनाः। अनूचानमानी = अनूचानमात्मानं मन्यत इत्येवं शीलो यः सोऽनूचानमानी। स्तब्धोऽप्रणतस्वभावः। एयाय गृहम्। इति छान्दोग्योपनिषदि भगवत्पादशंकरभाष्यम्॥

३. पितरं भगव इति संबोधयति। तस्यायमभिप्रायः यः कश्चन विद्यादाता स भगवानेवेति।

"तिष्ठन्त्विमे बालिशा अपटवः। अहमेव भवत्कार्यं सम्पादयिष्यामि" इति। तदेतच्छ्रुत्वा क्षुब्धो गुरुरन्यांश्छात्रान् धिक्करोत्ययम्। भविष्यत्काले सर्वत्र सर्वान् धिक्करिष्यन्ममैवापयश आर्जयिष्यति, इति विचार्य गृहीतं वेदं प्रत्यर्पय[१]। न मम शिष्यस्त्वम्। शिष्यः खलु विद्यया विनतः सर्वेषामनुकरणीयशीलो भवति—इति। क्रुद्धं गुरुं ज्ञात्वा भीतो याज्ञवल्क्यः तपःप्रभावादधीतं वेदं मूर्तीकृत्यावमत्। गुरोरनुज्ञया तमन्ये छात्रा अभक्षयन्।

खिन्नो गुरुकुलादेत्यात्मानं कृतविद्यं चिकीर्षुर्गुर्वन्तराभावादादित्यमुपगम्य ततः शुक्लं यजुरधीतवान्। यस्य च वेदस्य कालान्तरे महती विस्तृतिर्जाता। यदि नाम तदानीं याज्ञवल्क्यस्य प्रमादाभावोऽभविष्यत् तर्हि को वेद शुक्लं यजुः। कथं वा तस्य यजुषः प्रचारोऽभविष्यत्। ततो वयं जानीमो महतां प्रमादोऽपि शुभोदर्को भवति नास्मादृशाम्।

अतः प्राचीना द्विजाः स्वतनयमुपनीय स्वाध्यायाध्ययने प्रेरयामासुः। तदिदं स्वाध्यायाध्ययनं स्वविधिप्रयुक्तमिति भट्टमतानुयायिनो वर्णयन्ति। प्रस्थानान्तरे गुरुमतावलम्बिनोऽध्यापनविधिप्रयुक्तमित्याशेरते। अध्ययनं च "दृष्टे सम्भवति नादृष्टपरिकल्पना" इति न्यायेनाक्षरग्रहणान्तं भवतीति केचन। यावत्परिनिष्ठितमर्थज्ञानं गृहीतस्य शब्दराशेर्न भवति, तावदध्ययनं भवतीति वर्णयन्त्यन्ये[२]।

द्वितीये पक्षे केचन दोषानुद्भावयन्ति। तथाहि—बोधान्ततां यदि स्वाध्यायविधिरवगमयति तदाध्ययनाकार्त्स्न्यमित्येको दोषः। आशयमाविर्भावयन्ति च अर्थज्ञानस्य फलं कर्मानुष्ठानम्। अर्थज्ञानाभावे किमेतदनन्तरं किमन्यत्कर्तव्यम्, अन्यत्करणानन्तरमेतद्वेति सन्दिग्धः कर्मलोपं करिष्यति। सति ज्ञाने यथावदनुष्ठानसिद्धिरित्यर्थज्ञानस्य फलम्। अस्यामवस्थायामग्रजन्मनो राजसूयेऽधिकाराभावात्तमंशं किमर्थं गृह्णीयात् ब्राह्मणः। एवं वैश्यस्तोममन्त्रानन्यौ न गृह्णीयाताम्। ततश्च वेदाध्ययनस्याकृत्स्नता। प्राप्तिपक्षे नायं दोषस्समापतति इति। तदन्ये निषेधन्ति। "अहरहः स्वाध्यायमधीयीत" इति ब्रह्मयज्ञजपस्त्रैवर्णिकानां विहितः। न हि सम्पूर्णाध्ययनं विना शाखाजपः प्रसिध्यति। तत उत्तरे विधयस्सम्पूर्णशाखाध्ययनमवद्योतयन्ति। अपि च "बहुयाजयित्वा प्रतिगृह्य वानश्नंस्त्रिः स्वाध्यायं वेदमधीयीत" इति प्रायश्चित्तार्थमपि समग्रशाखाध्ययनं श्रूयते। तेनापि अध्ययनकार्त्स्न्यता भवति।

दोषान्तरं च समुद्घोषयन्ति। अर्थज्ञानं हि मन्त्रस्य ब्राह्मणभागस्य चेष्यते। ब्राह्मणभागे उपनिषदो भवन्ति। तासामर्थज्ञानेन जीवस्वरूपं नित्यं कूटस्थमशनायाद्यतीतं अपेतब्रह्मक्षत्रादिभेदं जायते। तदेतन्मोक्षसाधनम्। न ह्येतादृशज्ञानवान् नित्यकाम्यकर्मसु प्रवर्तते। अनुष्ठात्रभावात्समस्तं कर्म व्याकुलं भवेत्। अक्षरप्राप्तिफलकत्वे न दोषः प्रसज्यत इति।

---

१. गुरुः शिष्यमुवाचेत्थं क्रुद्धः केनापि हेतुना। प्रत्यर्पय मदीयां त्वं विद्यामित्यर्थयत्स च ॥ योगसामर्थ्यतो विद्यां मूर्तां कृत्वावमत्तदा। गृह्णीत तथाजुर्वान्तमित्यन्यान्गुरुरब्रवीत्। अन्ये तित्तिरयो भूत्वा किञ्चित्तानप्यभक्षयन्॥ काण्वसंहिताभाष्ये सायणः।

२. अत्र च प्रमाणं "य एवं वेद" इति वाक्यम्। अनुष्ठानजन्यो धर्मो मन्त्रार्थज्ञातुरपि भवतीति।

अत्रोच्यते—अर्थज्ञानपर्यन्तता स्वाध्यायविध्यर्थः। अनुष्ठानं च सर्वेषां कर्मणां भवत्येव। पूर्वोक्तं जीवस्वरूपज्ञानमौपनिषदं चित्तशुद्धिं प्राप्तवतो जीवस्यैव भवति न सर्वेषाम्। ज्ञानान्मुक्तिरिति न मीमांसका मन्यन्ते। तेषां मते जगन्नित्यम्। प्रपञ्चेन सह जीवस्य संबन्धविच्छेद एव मोक्षः। पूर्वजन्मार्जितस्य सुकृतदुष्कृतकर्मणः फलमुपभुञ्जानः काम्यप्रतिषिद्धानि कर्माणि वर्जयन्नित्यं दुरितक्षयसमर्थं कर्म करोति। एवं बहुषु जन्मसु दैवप्रसादात्स्वभावमधिगच्छन् धर्ममहिम्नाधर्मं संपूर्णं विलापयन्नुत्तरजन्मकारणाभावात्संसारसंबन्धोच्छेदमनुभवति। अद्वैतिनोऽपि परिशीलितात्मतत्त्वाः चित्तशुद्धिसम्पादनाय नित्यनैमित्तिककर्मणोः प्रबोधपर्यन्तं कर्तव्यतामनुमोदन्ते। ततश्चार्थज्ञानकल्पने दोषं न पश्याम इत्यास्तां तावत्।

सर्वज्ञाज्जगद्योनेः परब्रह्मणश्चतुस्स्कन्धो वेदतरुराविर्बभूव यं कल्पादौ सत्त्वगुणोपेताः महर्षयो महता तपसाधिजग्मुः। नायं वेदतरुर्नवीनः। पूर्वकल्पे य एवासीद्यादृशश्चासीत् स एवायम्। तमिमं वेदं त्रैवर्णिका गुरुमुखादधीतवन्तः। एकैकोऽपि स्कन्धः बहुशाखोपकीर्ण आसीत्। सर्वे दीर्घायुषः कल्पान्तरे समग्रान् स्कन्धानधीतवन्तः[१]। द्वापरे युगेऽल्पायुषां जीवानां कल्याणाय शाखानां विभेदं चकार। अयमभिप्रायः—यथा वा याजुषीषु शाखासु मन्त्रेषु पाठभेदाः "वायवस्थोपायवः स्थ देवो वः; वायवः स्थ देवो वः, इति, यथावा सामवेदे प्रथमे गाने तोयाइ, तोयाइ, तायाइ, तायाइ; इति सूपावसाना च स्वध्यवसाना च; सूपचरणा च स्वधिचरणा चेति ते सर्वे पूर्वमेवासन्। न कालान्तरेऽध्येतृवर्गेण परिकल्पिताः। परं वयं न जानीमो कस्यां शाखायां कीदृशः पाठः संयोजनीय इति। जानात्येतन्महर्षिर्वेदव्यासः। स तादृशीमेकैकां शाखां मन्त्रब्राह्मणात्मिकां व्यभजत्। ततः प्रभृति शाखाध्ययनं संप्रवृत्तम्।

नन्वेवं विभागं कुर्वतो भवत एष दोषः समापतति। पूर्वं स्वाध्यायपदं समस्तशाखालङ्कृतमेकं वेदमभिदधाति। साम्प्रतं शाखामेकामभिधत्ते। शास्त्रकाराः प्रत्यपादयन्नित्यः शब्दार्थयोः सम्बन्धः। कथं नित्यस्य पदादधिगतस्य पदार्थस्य भेदो भवेदिति।

अत्रोच्यते—"आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी" इति नियमोऽपि शास्त्रकारैर्व्युत्पादितः। यदि कृत्स्नस्य नानाशाखोपशोभितस्याम्नायस्य यजुषः साम्नो वाध्ययनं विधीयते तर्हि कृत्स्नमायुरद्यत्वेऽध्ययनेनैव परिसमाप्तिं प्राप्नोति। कदा वा तदर्थविचारः, कथं वा कर्तव्यपदार्थानामनुष्ठानं जीविकानिर्वाहः लोकव्यवहारश्च। अतश्च दीर्घायुषो महर्षयः पुरा कल्पे समस्तं वेदमधीतवन्तः। तदुदितमर्थं स्मृतिषु सङ्गृहीतवन्तः। न हि गुरुमुखाध्ययनं विनाद्यत्व इव सर्वशाखापरिशीलनमकुर्वन्। ततोऽकामेनापि पदार्थस्य भेदःकल्पनीयः। दृश्यते च प्रयोगः अवयवेऽपि ते अग्रहस्त इति।

सामवेदे सहस्रशाखा आसन्निति प्रामाणिकानां वचनैरवगच्छामः। यत्त्वत्र श्रीपादसातवेलकरः सामवेदसंहितायाः प्राक्कथने[२] "सहस्रवर्त्मा सामवेदः" इति वचनं सामगानं

---

१. अत एवाद्य त्रिवेदी, चतुर्वेदी, इत्युपाधयो विराजन्ते।

२, औन्ध्रराजधान्यां प्रकाशिते सामवेदे पृष्ठसंख्या ६।

गानपद्धतिभेदेन सहस्रधा विभिद्यते, इत्येव दर्शयति। न तु सामवेदस्य सहस्रं शाखाः सन्तीति; तस्य समर्थनं चाकरोत्। तदेतन्न प्रमाणमूलम्। वेदानां शाखागणनावसरे वाक्यमेतद्भगवता पतञ्जलिना प्रकाशितम्। ततश्च वयं जानीमो यत्सामवेदे सहस्रम्= इतरशाखापेक्षया अधिकाः शाखा आसन्। आपस्तम्बश्रौतसूत्रे च कासांचन शाखानां नाम दृश्यते। तदेवं कौथुमी, राणायणीया, जैमिनीया, नैगो[1], गौतमी[2], लाङ्गलीया[3], कालबवी[4], शाट्यायनी[5], शैलाली[6], भाल्लविकी[7] शाण्डिल्यशाखा[8] सात्यमुग्रीया[9] इति बह्व्यः शाखाः सामवेदे आसन्। परं तिस्रः शाखाः प्रचारपदवीमारूढा आद्याः।

मन्त्रक्रमे नास्ति भेदः कौथुमराणायनानाम्। आर्चिकस्य प्रपाठकात्मना अध्यायात्मना भेदम्, गानस्य प्रपाठकखण्डात्मना वा भेदं परिकल्पयन्ति। जैमिनिगानं तु प्रतिसाम प्रायः पाठभेदमावहति। तत्र सर्वेषां गानानामृङ्मण्डलं भिन्नमेव चकास्ति। कौथुमराणायनशाखयोः भूयान्प्रचारः। विन्ध्यस्योत्तरे भारते यज्ञकन्या कौथुमी दक्षिणे भारते राणायनीशाखा यज्ञधुरं बिभर्तीति प्रामाणिका वर्णयन्ति। केरलप्रान्ते जैमिनिशाखायाः प्रचारः। नाद्यावधि जैमिनिगानं प्रकाशितम्। केवलं हस्तलिखितकोश एवासीत्। वाराणसेयसंस्कृतविश्वविद्यालयस्तस्य गानस्य प्रामाणिकं प्रकाशनं प्रकल्प्य समग्रे भुवनेऽवर्णनीयं यशोऽधिगच्छति।

डा. रघुवीरमहोदयेन लवपुर्यां सम्पादिते[10] जैमिनीयसामवेदार्चिकग्रन्थे चत्वारः प्रभागा वर्तन्ते। सर्वक्रतुषु माध्यन्दिनतृतीयसवनयोर्विनियुक्तानां साम्नां योनिभूता ऋचो भागद्वयेन सङ्गृहीताः। द्वितीयस्य भागस्यारण्यकमिति समाख्याया विद्यमानत्वादरण्ये गेयानां साम्नामाधारभूता ऋचस्तत्र सङ्गृहीताः। तदितरा ऋचः प्रथमे भागे समाम्नाताः। तत्र पर्वत्रयं देवताभेदाज्जागर्ति। प्रथममाग्नेयम्, द्वितीयमैन्द्रम् तृतीयं पावमानं काण्डम्। आर्चिकस्य तृतीये भागे प्रातस्सवनादिषु त्रिषु सवनेषु विनियुक्तानां साम्नामाधारभूताः स्तोत्रियाः सङ्गृहीताः। इमाः स्तोत्रियाः दशरात्रे विनियुक्ता इति कश्चन भाग आद्यः। सामवेदोऽयं प्राधान्येन गवामयनक्रतुं निरूपयितुं प्रवृत्तः। दशरात्रपदार्थज्ञानं विना गवामयनस्य ज्ञानं दुःसम्पाद्यमिति मन्यमाना महर्षयो दशरात्रं प्रथमं न्यरूपयन्। यद्यपि गवामयनस्य[11] प्रकृतिर्द्वादशाहस्तथापि प्रथमोत्तमे अहनी तस्य ज्योतिष्टोमातिरात्रसंस्थाके भवत इति पूर्वमेव ज्योतिष्टोमातिरात्रस्य निरूपितत्वात्तदुपेक्ष्यावशिष्टानां दशानामह्नाम-

---

१. ऋक्तन्त्रभूमिका पृ० २, डा. सूर्यकान्तसंपादिता।

३. संहितोपनिषद्ब्राह्मणम्। ४. पुष्पसूत्रम्। ५. आप० श्रौ० सू० २१, १६, ४।

६. आप० श्रौ०। ७. आप० श्रौ० २१, १६, १५।

८. परिमलः पृ० सं० ७३५ ( निर्णयसागर प्रेस )।

९. महाभाष्ययम्, ऐओङ् सूत्रप्रसङ्गे।

१०. इतः पूर्वं वैदेशिकेन विदुषा रोमलिप्यां ग्रन्थो मुद्रितः। तदक्षरानभिज्ञानां स शिरोवेदनायते।

११. जै० सू० ८।

नुष्ठाप्रकारस्तत्र प्रकीर्तित इति दशरात्रपदार्थाभिज्ञा आशेरते। अन्तिमे भागे संवत्सराहीनैका-हसत्रप्रायश्चित्तक्षुद्रादिषु विहितानां साम्नामाधारभूताः स्तोत्रीयाः समाम्नाताः। एवं विषयशैलीमाश्रित्य चत्वारो भागा विलसन्ति।

प्रथमे भागे पर्वण्याग्नेये द्वादश खण्डाः। तत्र छन्दांस्याधारीकृत्य खण्डा विभक्ताः। प्रतिखण्डं दश ऋच अध्ययनार्थं संगृहीताः। यत्र क्वापि न्यूनमधिकं वापि भवन् दशतिः इति रूढिं भजते। तत्र गायत्रीच्छन्दसि चतुस्त्रिंशन्मन्त्रा वर्तन्ते। अतएव गानग्रन्थे तृतीय-खण्डस्यान्तिमे साम्नि "गौराङ्गिरसस्य सामनी द्वे इति गायत्रम्[१]" इति निर्देशः कृतः। एवमेव षष्ठखण्डस्यान्तिमे मन्त्रे "वैखानसस्य सामेति बार्हतम्" इति निर्देशः कृतो भवेत्। परं मुद्रणे नैवमुट्टङ्कितम्। गायत्र्याः पश्चात्त्रिषु खण्डेषु बृहत्यः। ततः षट्सु नानाच्छन्दांसि समाम्नाताः। सर्वेषां ऋक्साममन्त्राणां देवता अग्निर्भवति। ततः द्वादशखण्डसमाम्नातानां साम्नां ऋचां चाग्नेयं पर्वेति संज्ञा समजनि। पार्थिवमग्निं संस्तुत्य मध्यमस्थानमिन्द्रं द्वितीये भागे स्तुवन्ति मन्त्रद्रष्टारः। तत्र द्वादशस्य खण्डस्य समाप्तौ "इत्यैन्द्रपर्वणि तद्वपाठः समाप्तः" इति पुष्पिका जागर्ति[२]। तस्या अयमाशयः। ऐन्द्रे पर्वणि "तद्वो गाय" इत्यारभ्य द्वादशसु खण्डेषु ये समाम्नाता ऋङ्मन्त्रास्तेषां गानं परिसमाप्तमिति। "तद्वो गाय" इत्या-रभ्य "अयमेनम्" इति[२] यावद्गायत्रीच्छन्दस्का ऋच ऐन्द्र्यः। कौथुमशाखायां तद्वपाठस्य द्वौ भागौ बहुसामि एकसामीति। तृतीयं खण्डं विना प्रथमत आरम्य षट्सु खण्डेष्वाम्ना-तानामाद्यानामृचामाधारेण बहूनि सामानि गीतानीति छन्दस्साम्येऽप्यध्येतृज्ञानार्थं बहुसामि-संज्ञादत्ता। अवशिष्टखण्डारम्भमन्त्रेष्वेकमेव सामोत्पन्नमित्येकसामिसंज्ञां भजते। तद्वोपाठा-दनन्तरमष्टसु खण्डेषु बृहतीच्छन्दस्का ऋचो भवन्ति। ततस्सर्वासु सामशाखास्वस्य "बृहती" इति संज्ञा। ततस्त्रिसु खण्डेषु त्रिष्टुप्संज्ञा। जैमिनीये सामगानेऽस्मिन्प्रकरणे "इति त्रिष्टुभः" इति भवितव्यम्। तदन्वनुष्टुभि मन्त्राः पठ्यन्ते त्रिषु खण्डेषु। तदाश्रितानां साम्नां भागोऽनुष्टुप् भवति। अस्मिन्प्रकरणे "असाविपाठः समाप्तः[४]" इति वर्तते। ऐन्द्रे पर्वणि गायत्रीबृहत्योर्द्वौ राशी भवतः। तदनु जगत्यनुष्टुभावेकं राशिमवान्तरभागापरपर्यायं भजेते। अथोर्ध्वमनुष्टुभि जगत्यां च समादिष्टा मन्त्रा एकस्मिन्खण्डे समागच्छन्ति। तस्य कौथुम-शाखायां "जगती" संज्ञा। जगत्या अनन्तरं पङ्क्तिच्छन्दसि पठितव्यानामृचां स्थानमस्ति जैमिनीयगाने। शाखान्तरे उष्णिक्ककुभौ जगतीतः परं भवतः। पङ्क्तिच्छन्दसि खण्डद्वयम्। नानाच्छन्दस्सु संगृहीता मन्त्राः खण्डमेकं मण्डयन्ति। तदन्वुष्णिक्प्रभृत्यष्टिछन्दस्काः मन्त्राः षट्सु खण्डेषु संगृहीताः। भागेऽस्मिन्पठितानां साममन्त्राणामिन्द्रपुच्छमिति कौथुमिराणायनी-यानां वैदिकी समाख्या। नैवं व्यवहारो जैमिनीये गाने। अत्र द्वितीयमैन्द्रं पर्व संतिष्ठते।

---

१. सामगानम् पृ० सं० १५।
२. अयं मन्त्रः सामवेदशाखान्तरे नास्ति।
३. जैमिनीयगानम् पृ० १०१।
४. " पृ० १८३।

